॥ श्रीमीनाक्षीस्तुती २ ॥

अद्राक्षं बहुभाग्यतो गुरुवरैः सम्पूज्यमानां मुदा
  पुल्लन्मल्लिमुखप्रसूननिवहैर्हालास्यनाथप्रियाम् ।
वीणावेणुमृदङ्गवाद्यमुदितामेणाङ्क बिम्बाननां
  काणादादिसमस्तशास्त्रमतिताम् शोणाधरां श्यामलाम् ॥ १॥

मातङ्गकुम्भविजयीस्तनभारभुग्न
  मध्यां मदारुणविलोचनवश्यकान्ताम् ।
ताम्राधरस्फुरितहासविधूततार
  राजप्रवालसुषुमां भज मीननेत्राम् ॥ २॥

आपादमस्तकदयारसपूरपूर्णां
  शापायुधोत्तमसमर्चितपादपद्माम् ।
चापयितेक्षुममलीमसचित्ततायै
  नीपाटविविहर्णां भज मीननेत्रम् ॥ ३॥

कन्दर्प वैर्यपि यया सविलास हास
  नेत्रावलोकन वशीकृत मानसोऽभूत् ।
तां सर्वदा सकल मोहन रूप वेषां
  मोहान्धकार हरणां भज मीननेत्राम् ॥ ४॥

अद्यापि यत्पुरगतः सकलोऽपि जन्तुः
  क्षुत्तृड् व्यथा विरहितः प्रसुवेव बालः ।
सम्पोश्यते करुणया भजकार्ति हन्त्रीं
  भक्त्याऽन्वहं तां हृदय भज मीननेत्राम् ॥ ५॥

हालास्यनाथ दयिते करुणा पयोधे
  बालं विलोल मनसं करुणैक पात्रम् ।
वीक्षस्व मां लघु दयार्मिल दृष्टपादैर्-
  मातर्न मेऽस्ति भुवने गतिरन्द्रा त्वम् ॥ ६॥

श्रुत्युक्त कर्म निवहाकरणाद्विशुद्धिः
  चित्तस्य नास्ति मम चञ्चलता निवृत्तैः ।
कुर्यां किमम्ब मनसा सकलाघ शान्त्यैः
  मातस्तवदङ्घ्रि भजनं सततं दयस्व ॥ ७॥

त्वद्रूपदेशिकवरैः सततं विभाव्यं

चिद्रूपमादि निधनन्तर हीनमम्ब ।
भद्रावहं प्रणमतां सकलाघ हन्तृ
त्वद्रूपमेव मम हृत्कमले विभातु ॥ ८॥

॥ इति श्री जगद्गुरु शृङ्गगिरि चन्द्रशेखर
भारति स्वामिगळ् विरचितं मीनाक्षी स्तोत्रं सम्पूर्णम् ॥